# श्री जगन्मङ्गल काली कवचम्

भैरव्युवाच –

काली पूजा श्रुता नाथ भावाश्च विविधाः प्रभो ।
इदानीं श्रोतुमिच्छामि कवचं पूर्व सूचितम् ॥ 1 ॥

त्वमेव शरणं नाथ त्राहि मां दुःख संकटात् ।
सर्व दुःख प्रशमनं सर्व पाप प्रणाशनम् ॥ 2 ॥

सर्व सिद्धि प्रदं पुण्यं कवचं परमाद्भुतम् ।
अतो वै श्रोतुमिच्छामि वद मे करुणानिधे ॥ 3 ॥

श्री भैरव उवाच –

रहस्यं श्रुणु वक्ष्यामि भैरवि प्राण वल्लभे ।
श्री जगन्मङ्गलं नाम कवचं मन्त्र विग्रहम् ॥ 4 ॥

पठयित्वा धारयित्वा त्रैलोक्यं मोहयेत्क्षणात् ।
नारायणोऽपि यद्धृत्वा नारी भूत्वा महेश्वरम् ॥ 5 ॥

योगिनं क्षोभमनयत् यद्धृत्वा च रघूद्वहः ।
वरदीप्तां जघानैव रावणादिनिशाचरान् ॥ 6 ॥

यस्य प्रसादादीशोऽपि त्रैलोक्य विजयी प्रभुः ।
धनाधिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ।
एवं च सकला देवाः सर्वसिद्धीश्वराः प्रिये ॥ 7 ॥

ॐ श्री जगन्मङ्गलस्यास्य कवचस्य ऋषिः शिवः ।
छन्दोऽनुष्टुप् देवता च कालिका दक्षिणेरिला ॥ 8 ॥

जगतां मोहने दुष्ट विजये भुक्तिमुक्तिषु ।
योविदाकर्षणे चैव विनियोगः प्रकीर्तितः ॥ 9 ॥

॥ कवच ॥

शिरो मे कालिकां पातु क्रीकारैकाक्षरीपरा ।
क्रीं क्रीं क्रीं मे ललाटं च कालिका खड्गधारिणी ॥ 1 ॥

हूं हूं पातु नेत्रयुग्मं ह्रीं ह्रीं पातु श्रुति द्वयम् ।
दक्षिणे कालिके पातु घ्राणयुग्मं महेश्वरि ॥ 2 ॥

क्रीं क्रीं क्रीं रसनां पातु हूं हूं पातु कपोलकम् ।
वदनं सकलं पातु ह्रीं ह्रीं स्वाहा स्वरूपिणी ॥ 3 ॥

द्वाविंशत्यक्षरी स्कन्धौ महाविद्याखिलप्रदा ।
खड्गमुण्डधरा काली सर्वाङ्गमभितोऽवतु ॥ 4 ॥

क्रीं हूं ह्रीं त्र्यक्षरी पातु चामुण्डा हृदयं मम ।
ऐं हूं ऊं ऐं स्तन द्वन्द्वं ह्रीं फट् स्वाहा ककुत्स्थलम् ॥ 5 ॥

अष्टाक्षरी महाविद्या भुजौ पातु सकर्तृका ।
क्रीं क्रीं हूं हूं ह्रीं ह्रीं पातु करौ षडक्षरी मम ॥ 6 ॥

क्रीं नाभि मध्यदेशं च दक्षिणे कालिकेऽवतु ।
क्रीं स्वाहा पातु पृष्ठं च कालिका सा दशाक्षरी ॥ 7 ॥

क्रीं मे गुह्यं सदापातु कालिकायै नमस्ततः ।
सप्ताक्षरी महाविद्या सर्वतन्त्रेषु गोपिता ॥ 8 ॥

ह्रीं ह्रीं दक्षिणे कालिके हूं हूं पातु कटिद्वयम् ।
काली दशाक्षरीविद्या स्वाहान्ता चोरुयुग्मकम् ॥ 9 ॥

ॐ ह्रीं क्रीं में स्वाहा पातु जानुनी कालिका सदा ।
काली हृन्नामविधेयं चतुर्वर्गफलप्रदा ॥ 10 ॥

क्रीं हूं ह्रीं पातु सा गुल्फं दक्षिणे कालिकेऽवतु ।
क्रीं हूं ह्रीं स्वाहा पदं पातु चतुर्दशाक्षरीमम ॥ 11 ॥

खड्गमुण्डधरा काली वरदाभयधारिणी ।
विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु ॥ 12 ॥

काली कपालिनी कुरुला कुरुकुल्ला विरोधिनी ।
विपचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः ॥ 13 ॥

नीला घना वलाका च मात्रा मुद्रा मिता च माम् ।
एताः सर्वाः खड्गधरा मुण्डमाला विभूषणा ॥ 14 ॥

रक्षन्तु मां दिग्विदिक्षु ब्राह्मी नारायणी तथा ।
माहेश्वरी च चामुण्डा कौमारी चा पराजिता ॥ 15 ॥

वाराही नारसिंही च सर्वाश्रयऽति भूषणाः ।
रक्षन्तु स्वायुधेर्दिक्षुः दशकं मां यथा तथा ॥ 16 ॥

इति ते कथितं दिव्य कवचं परमाद्भुतम् ।
श्री जगन्मङ्गलं नाम महामन्त्रौघविग्रहम् ॥ 17 ॥

त्रैलोक्याकर्षणं ब्रह्मकवचं मन्मुखोदितम् ।
गुरु पूजां विधायाथ विधिवत्प्रपठेत्ततः ॥ 18 ॥

कवचं त्रिःसकृद्वापि यावज्ज्ञानं च वा पुनः ।
एतच्छतार्धमावृत्य त्रैलोक्य विजयी भवेत् ॥ 19 ॥

त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ।
महाकविर्भवेन्मासात् सर्वसिद्धीश्वरो भवेत् ॥ 20 ॥

पुष्पाञ्जलीन् कालिका यै मूलेनैव पठेत्सकृत् ।
शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥ 21 ॥

भूर्जे विलिखितं चैतत् स्वर्णस्थं धारयेद्यदि ।
शिखायां दक्षिणे बाहौ कण्ठे वा धारणाद्बुधः ॥ 22 ॥

त्रैलोक्यं मोहयेत्क्रोधात् त्रैलोक्यं चूर्णयेत्क्षणात् ।
पुत्रवान् धनवान् श्रीमान् नानाविद्यानिधिर्भवेत् ॥ 23 ॥

ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्र स्पर्शवात्ततः ।
नाशमायान्ति सर्वत्र कवचस्यास्य  कीर्तनात् ॥ 24 ॥

मृतवत्सा च या नारी वन्ध्या वा मृतपुत्रिणी ।
कण्ठे वा वामबाहौ वा कवचस्यास्यधारणात् ॥ 25 ॥

वह्वपत्या जीववत्साभवत्येव न संशयः ।
न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः ॥ 26 ॥

शिष्येभ्यो भक्तियुक्तेभ्यो ह्यन्यथा मृत्युमाप्नुयात् ।
स्पर्शामुद्धूय कमला वाग्देवी मन्दिरे मुखे ॥ 27 ॥

पौत्रान्तं स्थैर्यमास्थाय निवसत्येव निश्चितम् ।
इदं कवचमज्ञात्वा यो जपेद्दक्षकालिकाम् ॥ 28 ॥

शतलक्षं प्रजप्त्वापि तस्य विद्या न सिद्धयति ।
सहस्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥ 29 ॥

जपेदादौ जपेदन्ते सप्तवाराण्यनुक्रमात् ।
नोधृत्य यत्र कुत्रापि गोपनीयं प्रयत्नतः ॥ 30 ॥

लिखित्वा स्वर्णपात्रे वै पूजाकाले तु साधकः ।
मूर्ध्नि धार्यं प्रयत्नेन विद्यारत्नं प्रपूजयेत् ॥ 31 ॥

॥ इति श्री जगन्मङ्गल कवचम् ॥